# यदुशैलेशवन्दनं

## (Yadusailesa-Vandanam)

इति जितपरतन्त्रैः पंचरात्रैः स्वतन्त्रैः
उपनिषदवतंसैरुक्तिवर्गैर्मुनीनाम् ।
सुरभितहरिदन्ते यादवक्ष्माभृदग्रे
विहरति सह लक्ष्म्या विश्वहेतुर्मुरारिः ॥



कल्याणी वर्धतां काले वर्धन्तां वैष्णवोत्तमाः ।
यद्वद्रिनाथो जयतु यद्वद्रि श्रीश्च वर्धतां ॥
अष्टकं सुकुमारस्य वितनोतु सुखं शुभं ।
वेदपादस्तवाभद्रं महाभारतमंगलं ॥

शार्वरी-मीनपुष्यम् ☆ मूल्यं ४० काकणिकाः ☆ श्रीयादवगिरिः
27-3-1961 Rs. 0-40 nP. Melkote
Sri Sanudasa Granthamala Mysore State



This Booklet consists of three Hymns by The trio hailing from Melkote i. e.

Sarvashri 1 Prof. Jaggu Singer Iyangar
2 " Sahityaratnam " Prof. Jaggu Venkatacharya
3 Atreya Narsimhasunu Srinivasa Sharma

Adhyapakas in the oldest chartered Sanskrita College in Mysore i. e. " Shri Vedavedanta Bodhini " Sanskrita Maha Pathashala at Melkote.



**Copies can be had of -**

1 Ayangar Narasimhachar, Publisher,
Melkkote

2 A. N. Srinivas Iyangar No. 3. Peyalwar
Koil Street Tiruvallikkeni P. O. Madras–5



Printed at Loka Vijaya Press, Hyderabad.

# निवेदनं

श्रीमद्यादवशैलेश क्षीरकैंकर्यशालिने ।
श्रीशानुदासमुनये जनन्यार्याय मंगलं ॥
जीयाद्रामानुजाचार्यो यदुशैलपतेः पिता ।
नारायणप्रतिष्ठाता हरिभक्तिसुधानिधिः ॥
यदुशैलेशमात्रे च जनकाय हरेः शुभं ।
श्रीशानुदासगुरवे यतिराजाय मंगलं ॥
विष्णुचित्तात्मजां गोदां प्रपन्नकुलदीपिकां ।
रंगेश्वरवधूं वन्दे रामानुजवरानुजां ॥
मुग्धस्मेरमुखांभोजं इंदिरायाः पदांबुजं ।
वराभयदहस्तौ नः पान्तु सर्वत्र सर्वदा ॥
यद्वद्रिवासरसिकं प्रणमामि नित्यं ।
नारायणं निखिल लोक परायण तं ॥
श्रीशानुदासगुरुवर्यसमर्पितं यो ।
क्षीरं मुदा परमया कृपया व्यगृह्णात् ॥
मकुटं अनिरूद्धस्य धृत्वा रत्नविभूषणं ।
यदुशैलपतिर्जीयात् यतिराजसुतो हरिः ॥
इक्ष्वाकोः कुलनाथस्य कृष्णस्य च महात्मनां ।
भाग्यस्य सुकुमारस्य कृपया वोऽस्तु मंगलं ॥

स्वस्ति ! श्रीमत्समस्तभूमंडल मंडनायमान भारतदेशस्य दक्षिणाशाविभूषणस्य कर्णाटक जनपद श्रियः कर्णालंकारभूतस्य आस्तिकसमाश्रयस्य स्वयंव्यक्तक्षेत्ररत्नस्य पाँचरात्रागमहृदय-स्थानस्य सम्यमिसार्वभौमविजयस्थानस्य व्यास पराशर शुक पुंडरीकांबरीष शांडिल्य मैत्रेय लोहित मृगशृंग पिप्पलादादि मुनिगण संसेवितस्य श्रीदत्तात्रेय रामभद्र बलराम गीताचार्य गीताभाष्यरत्न श्रीभाष्य वेदार्थसंग्रहादि नवरत्नकल्प ग्रंथराशि निर्मातृ भगवद्रामानुज पादरेणु पवित्रित देशविशेषस्य नाराय-णाद्रि–वेदाद्रि– यादवाद्रि–यतिशैल–वैकुंठवर्धनक्षेत्र–मुक्तिक्षेत्र–इंदिराक्षेत्र- दक्षिणबदरिकाश्रम–श्रीनारायणपुरं – ज्ञानमटंपं–उपरितनदुर्गः (मेलुकोटे)इत्यादि विविध विचित्राश्चर्यपूर्ण पवित्र नामभि. प्रथितस्य रसिकजनहृदयानंदनस्य अष्टोत्तर शतस्थान-सारभूतस्य– सुमनोहर खनिजतरुनिकर जलाशय मृगद्विजगण यात्रिकजनगणाऽलंकृतस्य महोत्सवेषु प्रधानभूतस्य वज्रमुकुटी (अनिरूद्धकिरीटधारण, वैरमुडी ) महोत्सवस्य शुभेदिनेस्मिन् परमसुन्दर दिव्य मंगल विग्रहस्य– हृदयोद्भवस्य– रामप्रियस्य चारुहासस्य सुकुमारस्य सुवृत्तायतभुजस्य पद्मायाः परमभाग्यस्य सतांगतेः कासारादि दिव्यसूरि परिषत् सेवित पादपीठस्यविभूति द्वयनायकस्य संपत्पुत्रविमोचक भगवद् रामानुजाचार्य संशोधि-तस्य यतिराजसंपत्कुमारस्य भगवतः श्रीनारायणस्य प्रादुर्भाव महोत्सव दिदृक्षयागत जनस्य मानसोल्लासाय समर्पित मिदं- -यदुशैलेशवंदनं सतामानंदनं आनंदनं भवत्विति शम्– आ. न. श्री.



# संपत्कुमाराष्टकं

श्रीमद्यादवशैलेश क्षीर कैंकर्यशालिने ।
श्रीशानुदासगुरवे जनन्यार्याय मंगलं ॥
यदुशंलेशमात्रे च जनकाय हरेः शुभं ।
श्रीशानुदासमुनये यतिराजाय मंगलं ॥



श्रीमद्वज्रकिरीटधारिण महं पद्मामहीसेवितं
श्रीमत्ताक्ष्यं करारविन्दयुगली विन्यस्तपादांबुजं ।
मीने पुष्यदिनं च यादवगिरौ मासोत्तमे फाल्गुने
श्रीमन्तं यतिरासूनु मनघं संपत्कुमारं भजे ॥
कौसल्यातनयांचितं सुमनसा मानन्दसंपत्प्रदं
श्रीदेवीकरपद्मलालितपदं सर्वात्मसंजीवनं ।
भू लक्ष्मी वरनन्दिनी यतिवरै स्साकं रथाधिष्ठितं
कस्तूरीतिलकाभिराम ममलं संपत्कुमारं भजे ॥
रामाराधित मद्भुताकृतिवरं रामप्रियं श्रीधरं
रामारत्नसुसेवितं सुरवरं श्रेयोनिधिं सुन्दरं ।
गोमन्ते गिरिशेखरे यदुगिरौ श्रीयादवानां निधिं
सीमातीतगुणाभिरामसुभगं संपत्कुमारं भजे ॥
सीतानन्दननन्दिनी हितकरं पीतांबरं श्रीसखं
गोदापद्मसुकीर्तितं हृदिभवं गोदाग्रजानन्दनं ।
श्रीमद्यादवभूधरे हरिपरैः संसेव्यमानं विभुं
श्रीनारायणदिव्यदेशनिलयं संपत् कुमारं भजे ॥

सीतारण्यनिवासिना च बलिना रामेण संपूजितं
वृन्दारण्यनिवासिना च यमिनां नाथेन संशोधितं ।
वेदव्यासपराशरादिविनुतं वेदान्तसारार्थदम्
श्रीरामानुजयोगिराजतनयं संपत्कुमारं भजे ।।
श्रीमद्यादवशैलश्रृंगनिलयं श्रीरामकृष्णांचितं
कासारादि समस्त सूरिविनुतं नारायणं श्रीपतिम् ।
भक्तोपात्त सुमोत्करै रनुदिनं स्वाराधितं मंगलं
मुक्तोपास्य गुणोज्ज्वलं सुरपतिम् संपत्कुमारं भजे ।।
श्रीमद्व्यूहचतुर्थमूर्तिमकुटं श्रीवैनतेयार्पितं
धृत्वा रत्नविभूषणं यतिवरस्याग्रे स्थितं कोमलं ।
गंगामान्यसरोवरस्य निकटे देवं वसन्तं हरिम्
श्रीमद्यादवशैलशेखरविधुं संपत्कुमारं भजे ।।
मुक्तादाममहार्घभूषणलसद्दिव्यांगरागोज्ज्वलं
भूमासूत्रवरार्थनिश्चितमहत्तत्त्वं परं धीमहि ।
ढिल्लीराजसुतान्तरंगनिलयं ढिल्लीशजामातरं
भक्तानुग्रहदीक्षितं यतिपतेः संपत्कुमारं भज

## अनुबन्धः

संपत्पुत्रमहं वन्दे सच्चिदानन्दविग्रहं ।
रामप्रियं देवराजं शंखचक्रगदाधरं ।।
यदो वंशस्य रामस्य कुलदेवस्य धीमतां ।
अष्टकं सुकुमारस्य वितनोतु हितं शुभं ।।
निर्मितं श्रीनिवासेन रुचिरे भाग्यपत्तने
यदुशैलेशकृपया तनोतु विदुषाम् मुदम् ।।

# भारत कृष्ण मंगलम्

## आदि पर्व

अनुग्रहाय भक्तानां तद्द्विषां निग्रहाय च ।
अवतीर्णाय भूभागे वासुदेवाय मंगलम् ॥ १ ॥
आजानक्लेशमग्नास्ते कौन्तेया यत्प्रसादतः ।
कृष्णां राज्यं सुखं चापुः तस्मै कृष्णाय मंगलम् ॥ २ ॥

## सभापर्व

सर्वकर्मसमाराध्यः तद्विघ्नविनिवर्तकः ।
भक्ताङ्घ्रिशोधको यश्च तस्मै कृष्णाय मंगलम् ॥ ३ ॥
सनाथापि विनाथेव कृष्णा कृष्टा सभान्तरे ।
यन्नामकीर्तनात् त्राता तस्मै कृष्णाय मंगलम् ॥ ४ ॥

## वनपर्व

पार्थेभ्यो वनवासिभ्यो द्रोग्धुं दुर्योधनेरितः ।
निरस्तो येन दुर्वासाः तस्मै कृष्णाय मंगलम् ॥ ५ ॥

## विराट पर्व

अज्ञातवासनिश्शङ्काः पार्थायद्दत्तसम्पदा ।
सौभद्रोपयमं चक्रुः तस्मै कृष्णाय मंगलम् ॥ ६ ॥

## उद्योग पर्व

सौलभ्यपरिपूर्णाय परात्परतराय च ।
दूताय पाण्डुपुत्राणां सिद्ध धर्माय मंगलम् ॥ ७ ॥

## भीष्म पर्व

सर्वशास्त्रमयीम् गीतां यो ददौ बन्धमुक्तये ।
पार्थव्याजेन नः तस्मै पार्थसूताय मंगलम् ॥ ८ ॥

भीष्मबाणतिविद्धाय क्रुद्धायाप्लुत्य धावते ।
स्विन्नाय चक्रहस्ताय धूलिधूसरपक्ष्मणं ॥ ९ ॥
त्रस्तपीताम्बरदशां कर्षते भूतले मुहुः ।
परिष्टुताय भीष्मेण फुल्लपङ्कजचक्षुषे ॥ १० ॥
पार्थेन पुनरानीय स्थापिताय निजे रथे ।
त्रातयित्रेऽथ भीष्मस्य मेघश्यामाय मंगलम् ॥ ११ ॥

## द्रोण पर्व

अतिश्रान्तान् पार्थरथ्यान्मध्यान्हे युद्धमध्यगान् ।
पश्यत्सु सर्ववीरेषु सरो निर्माप्य निर्मलम् ॥ १२ ॥
संस्नाप्य पाययित्वा च नीरुजानकरोत्तु यः ।
सर्वसंमोहकायास्तु तस्मै कृष्णाय मंगलम् ॥ १३ ॥
पिधाय भानुं चक्रेण रात्रीकृत्य दिनं तु यः ।
अमारयत्सिन्धुराजं तस्मै कृष्णाय मंगलम् ॥ १४ ॥
वार्तिनीमेकवीरस्य शक्तिम् सम्प्रार्थ्य वासवात् ।
लब्धां कर्णेन सुचिराद्रक्षितां हन्तुमर्जुनम् ॥ १५ ॥
हैडिम्बेये यातुधाने रात्रियुद्धे घटोत्कचे ।
पातयित्वार्जुनं गोप्त्रे तस्मै कृष्णाय मंगलम् ॥ १६ ॥
प्रयुक्ते भगदत्तेन वैष्णवास्त्रेऽर्जुनं प्रति ।
यःस्वोरसा दधाराशु तस्मै कृष्णाय मंगलम् ॥ १७ ॥
अश्वत्थामवधं द्रोणं श्रावयित्वा युधिष्ठिरात ।
योऽघातय त्स्वाश्रितार्थे तस्मै कृष्णाय मंगलम् ॥ १८ ॥
नारायणास्त्राद्यो द्रौणिप्रयुक्ता त्सर्वसैनिकान् ।
ररक्ष क्षिप्तसामग्रीं स्तस्मै कृष्णाय मंगलम ॥ १९ ॥

## 'कर्णपर्व'

कर्णबाणार्तिविद्धेन सुप्तेन शिबिरे स्वके ।
धर्मपुत्रेण गाण्डीवे निन्दिते धनुषि स्वके ॥ २० ॥
स्वप्रतिज्ञानुसारेण च्छेत्तुं यौधिष्ठिरं शिरः ।
उद्यतासिं तु विजयं सूक्ष्मधर्मोपदेशतः ॥ २१ ॥
समाधायाग्रजस्यापि धिक्कारं स्वात्मन स्स्तुतिं ।
यः कारयित्वाऽरक्षद्द्वौ तस्मै कृष्णाय मङ्गलम् ॥ २२ ॥
कर्णप्रयुक्ते सार्पेऽस्त्रे कण्ठमुद्दिश्यवासवेः ।
रथमाक्रम्यभारेण पातयित्वाथ जानुना ॥ २३ ॥
वाहान् किरीटमात्रं यो हारयित्वा ररक्ष तम् ।
समयोचित धीभूम्ने तस्मै कृष्णाय मङ्गलम् ॥ २४ ॥
रथचक्र भुवाग्रस्तं उद्धरन्तं रवेस्सुतम् ।
अनिच्छतापि पार्थेन घातयित्रेऽस्तु मङ्गलम् ॥ २५ ॥

## 'शल्यपर्व'

बलक्षयात्ह्रदेमग्न मुत्थाप्य तु सुयोधनम् ।
मर्यादामप्यतिक्रम्य भीमेन गदया मृधे ॥ २६ ॥
संज्ञाप्य भेदयामास यस्सुयोधन सक्थिनी ।
भीमसन्धासमाधात्रे तस्मै कृष्णाय मङ्गलम् ॥ २७ ॥
अष्टादशेऽह्नि रणे पूर्णे शिबिरमागते ।
सायंरथेपूर्वमेव योऽवतार्यार्जुनं ततः ॥ २८ ॥
अवप्लुत्य रथात्तस्मा त्साश्वाद्भस्मीकृता त्क्षणात् ।
ररक्षार्जुनमेकाग्र स्तस्मै कृष्णाय मङ्गलम् ॥ २९ ॥

"सौप्तिकपर्व"

वराद्रुद्रस्य सर्वस्मिन्निशि सुप्ते बले हते ।
द्रौणिना निशि पञ्चानां रक्षकायास्तु मङ्गलम् ॥ ३० ॥

"स्त्रीपर्व

भीमं निरस्य प्रणतं आयसं तं निधायय: ।
ररक्ष भीमं जात्यन्धात् तस्मै कृष्णाय मङ्गलम् ॥ ३१ ॥

"शान्तिपर्व"

शरतल्पगता द्भीष्मा दशक्तादपि शक्तिद: ।
योऽश्रावयत्सर्वधर्मांस्तस्मै कृष्णाय मङ्गलम् ॥ ३२ ॥

"आनुशासनिकपर्व"

द्रौणिब्रह्मास्त्रनिर्दग्धमृतजातोत्तरासुतम् ।
योऽजीवयत्पुनस्तस्मै सर्वशक्ताय मङ्गलम् ॥ ३४ ॥

"आश्रमवासिक, मौसल, महाप्रस्थान, स्वर्गारोहण पर्वाणि"

सर्वभूभारनिर्हर्त्रे हित्वा स्वपरवेचनम् ।
निरंकुशस्वतन्त्राय तस्मै कृष्णाय मङ्गलम् ॥ ३५ ॥
मङ्गलं सूरिसेव्याय श्रीभूनीलाविहारिणे ।
परस्मै वासुदेवाय नित्यानन्दाय मंगलम् ॥ ३६ ॥

"निगमनम्"

बालधन्विकुलोद्भूतशिङ्गरार्यतनूभुवा ।
यद्विद्रिनित्यवासेन वेङ्कटार्येण सम्भृतम् ॥ ३७ ॥
भारतप्रतिपर्वस्थस्वकथारसमेदुरम् ।
मंगलम् स्वादयित्रे च तस्मै कृष्णाय मंगलम् ॥ ३८ ॥
रामानुजार्यसेव्याय नित्यं यद्वद्रिवासिने ।
भक्तानुग्रहदीक्षाय सम्मत्पुत्राय मंगलम् ॥ ३९ ॥

"श्रीकृष्णायनम:"

# वेद्पाद्स्तवः

श्रीशंश्रीयदुशैलेशं वेदपादावतंसितैः ।
पद्यैस्स्तोष्याम्यहं देवं दीर्घायुत्वाय वर्चसे ॥ १ ॥
यादवाद्रीश! भवतो गुणगुम्भनगौरवात् ।
श्रोतृ चित्त मुदे दोग्ध्र्यो माध्वीर्गावो भवन्तु नः ॥ २ ॥
नारायणांघ्रियुगलि! मणिमञ्जीरसेविते ।
श्रिया संवाह्यमाने त्वं शिवानश्शन्तमाभव ॥ ३ ॥
परमैश्वर्ययुक्तात्वाद्वेदानामुपदेशतः ।
तनोतु यादवाद्रीशश्शन्नइन्द्रो बृहस्पतिः ॥ ४ ॥
अग्रं नयति यो देवो नारायणइतीरितः ।
वेदान्तवेदिभिर्नित्यं सोग्निर्नः पातु कृत्तिकाः ॥ ५ ॥
तं नतोस्मि जगद्योनिं नारायणमनामयम् ।
यतस्मिसृक्षोर्जातानि मनस्सर्वेन्द्रियाणिच ॥ ६ ॥
तमेमि शरण श्रीशं नित्यं नारायणेतिच ।
यन्नामकीर्तनाज्जाता जिन्हामे मधुमत्तमा ॥ ७ ॥
यो वेद वाचामपि मुख्य वाच्यो
यत स्सुराचार्यक मापजीवः ।
सोयं यदुक्ष्माभृदधीश आद्यो
बृहस्पतिर्नः परिपातु पश्चात् ॥ ८ ॥
समस्तकल्याणगुणात्मकंतं
श्रीशंम् यदुक्ष्माभृदधीशमेव ।
आचार्यवीक्षाविभवैः किलाद्य
वेदाहमेनं पुरुषं महान्तम् ॥ ९ ॥

मध्येसमुद्रं धृतमत्स्यरूपो
हृयन्विष्य वेदं यदुशैलनाथ ।
तेनाभवत् ज्ञाननिर्धिविधाता
धातापुरस्ताद्यमुदाजहार ॥ १० ॥

मन्थानमद्रिं जलधौ निमग्नं
नारायणस्तेनहि निर्जरौघः ।
पपौ सुधांतां कमठाकृतिस्सन्
धातापुरस्ताद्यमुदा जहार ॥ ११ ॥

नतोऽस्मि यदुशैलेशं दंष्ट्रया क्रोडरूपिणा ।
उद्धृताभून्मही येन कृष्णेन शत बाहुना ॥ १२ ॥

नारायणस्सर्वग एव सर्व
रूपिति भक्तोक्तमृतं च कुर्वन् ।
स्तम्भाद्व्रजेतं नरसिंहवेषं
धाता पुरस्ता द्यमुदा जहार ॥ १३ ॥

नारायणोऽसौ बलियज्ञवाटे
धाराजले हस्तगते तदैव ।
दातुर्यशोराशिरिव प्रवृद्धो
नाकस्य पृष्ठे महतो महीयान् ॥ १४ ॥

नारायणो दाशरथित्वमेत्य
समुद्रतीरे कपिवीरगोष्ठ्याम् ।
मांपातु सोऽयं सकृदेव मन्त्रं
धाता पुरस्ताद्यमुदा जहार ॥ १५ ॥

श्रियः पतिः श्रीयदुशैलनायको
गुणत्रयातीत विशुद्ध धामवान् ।

तथापि भक्तार्तिहरः कृपावशात्
अजायमानो बहुधा विजायते ॥ १६ ॥
भजाम्येनं यदुशैलाधिनाथं
पुरा देवासुरयुद्धे प्रवृत्ते ।
उपेन्द्रेण प्रहरन् यंन नाके
शतं सेना अजयत्साकमिन्द्रः ॥ १७ ॥
यद्वद्री श्रीश कैङ्कर्यं भाग्योऽत्रनियतंवसन् ।
उभौ मन्ये समौ यश्च गच्छेद्ब्रह्म सलोकताम् ॥ १८ ॥
मन्त्ररत्नाभिधा या वै नारायण जगद्गुरो ।
नवाक्षराधिका सा मे षोडशी शर्म यच्छतु ॥ १९ ॥
श्रीशाद्धृतदरारिभ्यां मभयाद्गदयापिच ।
निवारितदरारिभ्यां बाहुभ्यामुततेनमः ॥ २० ॥
इत्थंमयाकृतामेनां वेदपादस्तुतिं हरिः ।
अङ्गीकरोतु कृपया यद्वद्रीशो रमापतिः ॥ २१ ॥

श्री बालधन्विकुलोद्भूतशिगरार्थंकवेः कृतिः
वेदपादस्वोभद्रंवितनोतु सुखं शुभं !

## श्रीज्ञानुदास ग्रन्थमाला, मेलकोटे P. O. मैसूर

### श्री. उ. वे " साहित्यरत्नं " जग्गू वेंकटाचार्यस्वामि स्मारक ग्रन्थ प्रकटन – पारितोषिक निधिः

### नि वे द नं

मंगलं यतिराजस्य महाभारतमंगलं ।
वराह–नरसिंहादि–मंगलं सज्जनप्रियं ॥
श्रीमद् द्राविड सूरीणां यतीन्द्र प्रवणस्यच ।
वैभवं वर्णितं दिव्यं सन्नुतं मंगलावहं ॥
' साहित्यरत्नं–कविना सांख्यतीर्थेन सादरं
देववाण्यांतु महता यदुशैल–निवासिना
वेदान्तद्वयसारज्ञैशिगस्त्रयं कवेस्सुतः
वालधन्वि जग्गू वेंकटदेशिककुलाब्धींदु
श्रीमुखे मकराश्रेषा जातः कुशिकनन्दनः
श्री मन्त्तादि (87) संख्याब्दानुषित्वा यदुभूधरे ।
वेदवेदान्त वोधिन्यां पपाठाऽपाठयच्चयः
इतिहास पुराणानां तात्पर्यं व्यवृणोन्मुदा ।
यादवाद्रीश–निलये भ्रातासहगरीयसा ॥
स्तोत्रपाठं तथागानं रसार्द्रं मधुरप्रियं ।
चक्रेचाऽतोषयद्देवं सूरीन् भक्तान्चिरायवै
शार्वरी कर्कटे ' कृष्णे ' येनक्तं आदित्यावासरे
श्री मद्यादवशैलाग्रे चाष्टम्यांकृत्तिकांयुते
शास्त्रविश्वासशालीच रामानुजमतानुगः
उपसिता हयास्यस्य प्राप विष्णोः पदंशुभं
अस्य पंडित रत्नस्य स्मारकं कर्तुमव्ययं
प्रार्थनं क्रियते विद्वत्–धर्म–संस्कृतिवत्सले
भारतस्य सुराष्ट्रस्य जने सौभाग्यशालिनि
लेखनं द्रविणं मुख्यं कर्तव्येऽस्मिन सुहृत्तमाः
कृपया साह्यहस्तेन प्रयच्छन्तु शुभं परं

# निवेदन

उदारचरित तथा विद्वत्धर्मप्रिय लोगों में विज्ञापना यही हैं कि सुप्रसिद्ध यादवगिरि दिव्य क्षेत्र के महाविद्वान् और प्राध्यापक साहित्यरत्नं सांख्यतीर्थं शास्त्रकविरत्नं साहित्यालंकार वेदान्त विद्वान् श्रीमदुभयवेदान्तप्रवर्तक जग्गू वेंकटाचार्य स्वामि स्मारक ग्रन्थ–पारितोषिक निधि संग्रहण कार्य में भारत के सब आस्तिक विद्वान्–प्रिय लोगों की उदार–सहकार की मदद की जरुरत हैं।

अतः आस्तिक–श्रीमन्त–उदार लोग निधि को तुरन्त मदद करने की कृपा करे।

आयंगार नरसिंहाचार्यं
निवेदक तथा व्यवस्थापक
श्रीशानुदास ग्रंथमाला
मेलुकोटे P. O. महीशूर संस्थानं
(Mysore State)

## *Homage to Scholar*

It is proposed to publish a collection of articles in Sanskrit, Kannada. Hindi and English on the life & works of Sri. U.Ve.Sahitya Ratnam Jaggu Venkatacarya, Retired Professor of Sanskrit Literature and Philosophy, Melkote (Mysore state), who passed away on the

night of 14th August 1960. and who has won laurels from eminent Sanskrit Scholars of India and the Rulers of Mysore for his works on Literary criticism on the works of Panditaraja Jagannatha & Appayya Dikshita. A collection of late revered. Poet's devotional lyrics in Sanskrit will also be published. It is also proposed to institute two prizes in the Scholor's Name to be awarded annually to (1) the best student of the Sanskrit College at Melkote who passes with distinction in Sanskrit Liteeture and to (2) the best scholar who passes with distinction in the study of Sri Bhashya at the annual conference of the Ubhaya Vedanta Pravartana Sabha at Melkote Liberal contributions (Literary as well as financial) are cordially invited from all scholars and admirers of Sri. U. Ve. Jaggu Venkatacharya Swamiji who has served the cause of Sanskrit and: Sri. Ramanuja Darsana for more than a half a century at Melkote, the Vijayasthana of Sri Ramanujacharya

The literary contributions as well as donations towards the publication of the Memorial Grantha and Prizes may be kindly forwarded, it is requested, to the Hon Editor, Srisanudasa Granthamala. No 3 Peyalwar Samidhi Street Tiruvallikkeni, Madras 5.

———